॥ ❀ अथ याज्ञवल्क्यशिक्षाप्रारंभः ❀ ॥

(1)

॥श्रीगणेशायनमः॥ ॥अथातस्त्रैस्वर्यलक्षणंव्याख्यास्यामः॥
उदात्तश्चानुदात्तश्चस्वरितश्चतथैवच ॥ लक्षणंवर्णयिष्यामिदैवतं
स्थानमेवच॥१॥शुक्लमुच्चंविजानीयान्नीचंलोहितमुच्यते॥श्यामं
तुस्वरितंविंद्यादग्निमुच्चस्यदैवतम्॥२॥ नीचेसोमंविजानीयात्स्व
रितेसविताभवेत्॥ उदात्तंब्राह्मणंविंद्यान्नीचंक्षत्रियमुच्यते॥३॥वै
श्यंतुस्वरितंविंद्याद्भारद्वाजमुदात्तकम्॥ नीचंगौतममित्याहुर्गा
र्ग्यंचस्वरितंविदुः॥ ४ ॥ विंद्यादुदात्तंगायत्रंनीचंत्रैष्टुभमुच्यते॥

या० जागतंस्वरितंविंद्यादतएवंनियोगतः ॥ ५ ॥ गांधर्ववेदेयेप्रोक्ताःस शि०
॥ १ ॥ प्तषड्जादयःस्वराः ॥ तएववेदेविज्ञेयास्त्रयउच्चादयःस्वराः ॥ ६ ॥
उच्चौनिषादगांधारौनीचौऋषभधैवतौ ॥ शेषास्तुस्वरिताज्ञेयाःष
ड्जमध्यमपंचमाः ॥ ७ ॥ षड्जोवेदेशिखंडिःस्यादृषभःस्यादजा
मुखे ॥ गवारंभंतिगांधारंक्रौंचाश्चैवतुमध्यमम् ॥ ८ ॥ कौकिलःपं
चमोज्ञेयोनिषादंतुवदेद्गजः ॥ आश्वश्चधैवतोज्ञेयःस्वराःसप्तविधी ॥ १ ॥
यते ॥ ९ ॥ निमेषमात्रःकालःस्याद्विद्युत्कालस्तथापरे ॥ अक्षरा

त्तुल्ययोगाच्चमतिःस्यात्सोमशर्मणः ॥ १० ॥ सूर्यरश्मिप्रतीकाशा
त्कणिकायत्रदृश्यते ॥ अणवस्यतुसामात्रामात्राचचतुराणवा ॥
११ ॥ मानसेचाणवंविंद्यात्कंठेविंद्याद्विराणवम् ॥ त्रिराणवंतुजि
ह्वाग्रेनिःसृतंमात्रिकंविदुः ॥ १२ ॥ अवग्रहेतुकालःस्यादर्धमात्रावि
धीयते ॥ पदयोरंतरेकालएकमात्राविधीयते ॥ १३ ॥ ऋचोर्द्धंतुद्विमा
त्रःस्यात्त्रिमात्रःस्याहगंतके ॥ रिक्तंतुपाणिमुत्क्षिप्यद्विमात्रेधारयेद्बु
धः ॥ १४ ॥ एकमात्रोभवेद्ध्रस्वोद्विमात्रोदीर्घउच्यते ॥ त्रिमात्रस्तुप्लुतो

याः ज्ञेयोऽव्यंजनंचार्द्धमात्रकम् ॥ १५ ॥ विवृतौचावसानेचऋचोर्द्धेच शि॰
॥ २ ॥ तथापरे ॥ पदेचपादसंस्थानेशून्यहस्तंविधीयते ॥ १६ ॥ प्रणवंतुप्लुतं
कुर्याद्द्वयाहुतीर्मातृकाविदुः ॥ चाषस्तुवदतेमात्रांद्विमात्रांवायसोऽब्र
वीत् ॥ १७ ॥ शिखीवदतित्रिमात्रांमात्राणामितिसंस्थितिः ॥ वर्णो
जातिश्चमात्राचगोत्रंछंदश्चदैवतम् ॥ १८ ॥ एतत्सर्वंसमाख्यातंया
ज्ञवल्क्येनधीमता ॥ हस्तौतुसंयतौधार्यौजानुभ्यामुपरिस्थितौ ॥ २ ॥
॥ १९ ॥ गुरोरनुमतंकुर्यात्पठन्नान्यमतिर्भवेत् ॥ ऊरुभागेतृतीयेतु

करंविन्यस्यदक्षिणं ॥२०॥ प्रसन्नमानसोभूत्वाकिंचिन्निम्नमधोमु
खं ॥ प्रणवंप्राक्प्रयुंजीतव्याहृतीस्तदनंतरं ॥ २१॥ सावित्रींचानु
पूर्व्येणततोवेदान्समारभेत्॥कूर्मोंगानीवसंहृत्यचेष्टांदृष्टिंदृढंमनः
॥२२॥स्वस्थःप्रशांतोनिर्भीतोवर्णानुच्चारयेद्बुधः॥ नाभ्याहन्यान्न
निर्हन्यान्नगायेन्नैवकंपयेत् ॥२३॥ यथैवोच्चारयेद्वर्णांस्तथैवैतान्स
मापयेत् ॥ निवेश्यदृष्टिंहस्ताग्रेशास्त्रार्थमनुचिंतयेत् ॥ २४ ॥ सम
मुच्चारयेद्वर्णान्हस्तेनचमुखेनच ॥ स्वरश्चैवतुहस्तश्चद्वावेतौयुगप

द्भवेत् ॥ २५ ॥ हस्तभ्रष्टःस्वरभ्रष्टोनवेदफलमश्नुते ॥ नकरालोन
लंबोष्ठोनाव्यक्तोनानुनासिकः ॥ २६ ॥ गद्गदोबद्धजिह्वश्चनवर्णा
न्वक्तुमर्हति ॥ प्रकृतिर्यस्यकल्याणीदंतोष्ठौयस्यशोभनौ ॥ २७ ॥ प्र
गल्भश्चविनीतश्चसवर्णान्वक्तुमर्हति ॥ शंकितंभीतमुद्घृष्टमव्यक्तम
नुनासिकं ॥ २८ ॥ काकस्वरंमूर्न्द्धिगतंयथास्थानविवर्जितं ॥ वि
स्वरंविरसंचैवविश्लिष्टंविषमाहतं ॥ २९ ॥ व्याकुलंतालुहीनंच
पाठदोषाश्चतुर्दश ॥ संहितासारबहुलःपदसंज्ञासमाकुलः ॥ ३० ॥

॥ ३ ॥

क्रमसंधिसमाकीर्णोदुस्तरोमंत्रसागरः ॥ ऋक्संहितांत्रिरभ्यस्यय
जुषांवासमाहितः ॥ ३१ ॥ साम्नांवासरहस्यांचसर्वपापैःप्रमुच्य
ते ॥ संहितानयतेसूर्यंपदंचशशिनःपदं ॥ ३२ ॥ क्रमश्चनयतेसूक्ष्मं
यत्तत्पदमनामयं ॥ कालिंदीसंहिताज्ञेयापदयुक्तासरस्वती ॥ ३३ ॥
क्रमेणावर्त्तयेद्गंगांशंभोर्वाणीतुनान्यथा ॥ यथामहान्हदंप्राप्यक्षि
प्तोलोष्ठोविनश्यति ॥ ३४ ॥ एवंदुश्चरितंसर्वंवेदेत्रिवृतिमज्जति ॥
आम्रपालाशबिल्वानामपामार्गशिरीषयोः ॥ वाग्यतःप्रातरुत्था

या० यभक्षयेद्दंतधावनं ॥ ३५॥ खदिरश्चकदंबश्चकरवीरकरंजकौ ॥ए शि०
॥ ४ ॥ तेकंटकिनःपुण्याःक्षीरिणस्तुयशस्विनः ॥ ३६ ॥ तेनास्यकरणेसू
क्ष्मंमाधुर्यंचैवजायते ॥ त्रिफलांलवणोक्तेनभक्षयेंच्छिष्यकःस
दा ॥ क्षीणमेधाजनन्येषास्वरवर्णकरीतथा ॥३७॥ हस्तहीनंतुयो
धीतेमंत्रंवेदविदोविदुः ॥ नसाधयतियजूंष्यषिभुक्तमन्यंजनंयथा
॥ ३८ ॥ हस्तहीनंतुयोधीतेस्वरवर्णविवर्जितं ॥ ऋग्यजुःसामभि ॥ ४ ॥
र्दग्धोवियोनिमधिगच्छति ॥ ३९ ॥ ऋचोयजूंष्यषिसामानिहस्त

हीनानियः पठेत् ॥ अनृचोब्राह्मणस्तावद्यावत्स्वारंनविंदति ॥४०॥
ज्ञातव्यश्चतथैवार्थोवेदानांकर्मसिद्धये ॥ पठन्मात्रापपाठात्तुपंके
गौरिवसीदति ॥४१॥ स्वरवर्णप्रयुंजानोहस्तेनाधीतमाचरन् ॥
ऋग्यजुःसामभिःपूतोब्रह्मलोकमवाप्नुयात् ॥ ४२ ॥ नकुर्वीतपदं
दीर्घंनकुर्वीतविलंबितं ॥ पदस्यग्रहमोक्षौचयथाशीघ्रगतिर्हयः ॥
॥ ४३ ॥ आगमंकुरुयत्नेनकारणंहितदात्मकं ॥ आस्येनचशयंकु
र्यात्पठन्नान्यमतिर्भवेत् ॥ ४४ ॥ नचास्यमुष्टिबंधीस्यान्नचात्यु

या० ॥ ५ ॥ त्तममाचरेत् ॥ चुलुर्नौकास्फुटोदंडीस्वस्तिकोमुष्टिराकृतिः ॥ एते शि०
वैहस्तदोषाःस्युः परशुश्चैवसप्तमः ॥ ४५ ॥ यथावाणीतथापाणीरि
क्तंतुपरिवर्जयेत् ॥ यत्रयत्रस्थितावाणीपाणिस्तत्रैवतिष्ठति ॥४६
यथाधनुष्यावितते शरेक्षिप्ते पुनर्गुणः ॥ स्वस्थानंप्रतिपद्येततद्वद्ध
स्तगतःस्वरः॥ ४७॥ उत्तानंसोन्नतंकिंचित्सुव्यक्तांगुलिरंजितं ॥
स्वरविद्धंकरंकुर्यात्प्रादेशोद्देशगामिनं ॥ ४८ ॥ अंगुष्ठस्योत्तरेपर्वैत
र्जन्योपरियद्भवेत् ॥ प्रादेशस्यतुसोद्देशस्तन्मात्रंचालयेत्करं॥४९॥ ॥ ५ ॥

मनुष्यतीर्थोच्चंकृत्वापितृतीर्थोदकंव्रजेत् ॥ नामितंकरपृष्ठेतुसुऽय
क्तांगुलिमोक्षणं ॥५०॥स्वरितेत्र्यंगुलंविंद्यान्निपातेतुषडंगुलं ॥ उ
त्थानेतुनवांगुल्यमेतत्स्वरस्यलक्षणं॥५१॥अभ्यासार्थेद्रुतांवृत्तिं
प्रयोगार्थेतुमध्यमां ॥ शिष्याणामुपदेशार्थंकुर्याद्वृत्तिंविलंबितां॥
॥५२॥ऐंद्रीतुमध्यमावृत्तिःप्राजापत्याविलंबिता॥अग्निमारुतयो
र्वृत्तिःसर्वशास्त्रेषुनिंदिता॥५३॥ मुष्ट्याकृतिर्मकारेतुनकारेतुनखा
ग्रतः ॥ अनुस्वारेंगुष्ठक्षेपऊष्मांतेंगुलिमोक्षणं ॥ ५४ ॥ उदात्तंभुवि

या॰ पातेनप्रचयंनासाग्रमेवच ॥ शेषंषडंगुलंविंद्यान्निचितंतुविधीयते शि॰
॥६॥ ॥ ५५ ॥ षडंगुलंतुजात्यस्यहस्तस्यानुपथस्यच ॥ तच्चतुर्भागमा
त्रंतुहस्तस्तेनैववर्तयेत् ॥ ५६ ॥ ककारांतेटकारांतेङणेचांगुलिना
मये ॥ पंचांगुल्यमकारेतुतकारेकुंडलाकृतिः ॥ ५७ ॥ ऊर्ध्वक्षेपा
च्चयोष्माचअधःक्षेपाच्चयोभवेत् ॥ एकैकामुत्सृजेद्धीरःस्वरितेतू
भयंक्षिपेत् ॥ ५८ ॥ अंगुष्ठाकुंचनंलृधौअनुस्वारेत्वपाठ रसं ॥ ॥६॥
दीर्घैरंगेचतर्जन्याः प्रसारःपरिकीर्तितः ॥५९॥ तर्जन्यंगुष्ठयोःस्प

शैष्प्युदात्तंप्रतिविद्यते ॥ नीचंतुमध्यमंकुर्याच्छेषंनीचतरंक्रमात् ॥
॥ ६० ॥ स्वरितंयद्भवेत्किंचिद्वकारसहहसंयुतं॥ऊष्माणंतद्द्विजानी
यान्निक्षिपेदुभयोरपि ॥ ६१ ॥ स्वरितसंज्ञेचनिक्षिप्तेसंयोगोयत्रदृ
श्यते ॥ द्विमात्रिकेभवेदेकमात्रिकेतूभयंक्षिपेत् ॥ ६२ ॥ जात्येच
स्वरितेचैववकारोयत्रदृश्यते ॥ कर्तव्यस्तूभयोःक्षेपोवायव्यइति
दर्शनं ॥ ६३ ॥ शृंगवद्वाथवत्सस्यकुमारीकुचयुग्मवत् ॥ उभक्षेप
स्वरोयत्रसविसर्गउदाहृतः ॥ विसर्गांतस्वरोयत्रस्वरितोयत्रदृश्य

ते ॥ दीर्घश्चैवतुकारश्चतत्रोभक्षेपउच्यते ॥ त्रिविधस्तुभवेदूष्माप्र
चितावलकातरा ॥ स्वरितेप्रचिताविद्यान्निपातेबलकांविदुः ॥
॥ ६४ ॥ उत्थानेतुतथाताराएताभिस्त्रिभिरूष्मभिः ॥ मात्रामात्रां
विदित्वातुततःक्षेपंप्रयोजयेत्॥६५॥अक्षरंभजतेकाचित्काचिद्वि
त्तेप्रतिष्ठितं ॥ समानेजातिकाकाचित्काचिदूष्माप्रदायिका ॥
॥ ६६ ॥ यथाबालस्यसर्पस्यउच्छ्वासोलघुचेतसः॥एवमूष्माप्रयो
क्तव्याहकारःपरिवर्जितः ॥ ६७ ॥ विवृतिंप्रत्यययाऊष्मांप्रवदंतिम

नीषिणः ॥ तामेवप्रतिषेधंतियथाआईऊएइतिनिदर्शनं ॥ ६८ ॥
अष्टौस्वरान्प्रवक्ष्यामितेषामेवतुलक्षणं ॥ जात्योभिनिहितक्षैप्रप्र
श्लिष्टश्चतथापरः ॥ ६९ ॥ पादवृत्तस्तथाभाव्यइतिस्वराः ॥ एक
पदेनीचपूर्वःसयवोजात्यः ॥ एकपदइत्याह ॥ ७० ॥ नीचपूर्वः स
यकारवकारौवाजात्यः स्वरितोभवति ॥ यथाजात्यंमनुष्यानि
ति। सुद्येति। चम्वीव। धान्यं। कन्याइव। स्वः। वीर्यं। एवंह्याह
यानिचान्यानीदृग्लक्षणानिपदानिभवंति ॥ एओआभ्यामुदात्ता

या० भ्यामकरोरिफितश्चयः ॥ अकारोयत्रलुप्येततंचाभिनिहितंविदुः शि०
॥८॥ ॥७१॥ यथा कुक्कुटः असि। कुक्कुटोसि। वेदः असि। वेदोसि। भा
गः असि। भागोसि। मारुतः असि। मारुतोसि। श्वात्रः असिति।
अप्सरसाम्। तेप्सरसाम्। ते अवंतु। तेवंतु। कः असि कोसि। सः
अहं। सोहं एवर्ठंहियानिचान्यानिईदृग्लक्षणानिपदानिभवंति॥इ
उवर्णौयदोदात्तावापद्येतेयवौक्वचित्॥ अनुदात्तेपदेनित्यंविंद्यात्क्षै ॥८॥
प्रस्यलक्षणम्॥७२॥ यथा त्रि अंबकम्। त्र्यंबकम्। द्रु अन्नः। द्व

न्नः । वीडु अंगः । वीड्वंगः । वाजी अर्वन् । व्वाज्यर्वन् । एवछ्व्या
हयानिति ॥ इकारोयत्रदृश्येतइकारेणैवसंयुतः ॥ उदात्तश्चानुदात्ते
नप्रश्लिष्टोभवतिस्वरः ॥ ७३ ॥ अभि । इन्धताम् । अभीन्धताम् ।
अभि । इमं । अभीमं । वि । इहि । वीहि । स्रुचि । इव । स्रुचीव । चम्वी ।
इव । चम्वीवेति । एवछ्व्याहयानिचान्यानि । उदात्तपूर्वंयत्किंचि
च्छंदसिस्वरितंपदं ॥ एषसर्वंबहुस्वारस्तैरोव्यंजनउच्यते ॥ ७४ ॥ इडे
। रंते । हव्ये । काम्ये । चंद्रे । ज्योते ॥ अदिति । सरस्वती । महि । व्वि

या० श्रुतीतिभवंति। एवथ्७ह्याहयानि०भवंति॥अवग्रहात्परोयस्तुस्व शि०
॥९॥ रितःस्यादनंतरं॥ तैरोविरामंतंविंद्यादुदात्तोयद्यवग्रहः॥ ७५॥ य
थागोमदितिगो। मत्। गोपताविति गो। पतौ। प्रप्रेतिप्र प्र। वितते
तिवि। तता। समिद्धइतिसम्। इद्धः। एवथ्७ह्याहयानि०भवंति॥
स्वरेतिस्वरितेचैवविवृतिर्यत्रदृश्यते॥ पादवृत्तोभवेत्स्वारः श्वित्र
आदित्येतिनिदर्शनं॥श्वित्रः। आदित्यानां। श्वित्रआदित्यानां।पु ॥९॥
त्रः। ईधे। पुत्रईधे। दात्रे। एधि। दात्रएधि। कः। ईम्। कईम्। ताः।

अस्य। ताअस्य। एवष्ठ ह्याहया नि॥उदात्ताक्षरयोर्मध्येभवेन्नीच

स्त्ववग्रहः ॥ तथाभाव्यंभवेत्कंपंस्तनूनप्त्रेतिनिदर्शनम् ॥ ७८ ॥

यथातनूनप्त्रइति तनू। नप्त्रे। तनूनपादिति तनू। नपात्। तनूनपा

तमिति तनू। नपातम्। एवष्ठ ह्याहयानिपदानिलक्षणानिभवंति॥

इत्यष्टपदसमाम्नायेवैशेषिकेयाज्ञवल्क्यवचनानांपदानांपाठःस

मासः॥ ॥माध्यंदिनविरोधिस्याात्तथाभाव्यस्तुयः स्मृतः॥स्वरोनै

वात्रदृश्येतभिन्नादात्तानुदात्तकौ॥१॥स्वराः स्पर्शांतस्थोष्माणः॥

या० कंठ्य। जिव्हामूलीय। तालव्य। मूर्धन्य। दंत्य। ओष्ठ्य। यमावि शि०
॥१०॥ सर्जनीयनिपाताद्याश्चकिंवर्णदैवत्यलिंगाः। स्वराः शुक्लाः नाना
दैवत्याः। स्पर्शाःकृष्णाः। कपिलाअंतस्थाः। ऊष्माणोऽरुणाः।
नीलायमाः। हरितानासिक्याः। पीतोनुस्वारः। रक्तोजिह्वामूली
यः। पीतउपध्मानीयः। श्वेतोविसर्जनीयः। शबलोरंगः। नीलोनु
नासिक्यः। इत्यंतर्मध्यमयोर्नासिक्यंविद्यात्॥ द्विरुदात्ताख्याइ ॥१०॥
तिस्मृतः॥ उदमनुदनिपातेआद्येचोपसर्गेनामाख्यातेचोपसर्गनि

पाताश्चेति। किंदैवत्याः। अक्षराणांचकेपुरुषाः।काःस्त्रियः। कानि
नपुंसकानिइत्यत्रब्रूमः। कंठ्याआग्नेयाः । अकारादयः॥ जिव्हा
मूलीयानैर्ऋत्याः ककारादयः। तालव्यः सौम्याः चकारादयः।
वायव्यामूर्धन्याष्टकारादयः। रौद्रादंत्याः तकारादयः। औष्ठ्या
आश्विन्याः पकारादयः। शेषावैश्वदेवाः।अंइत्येवमादयः। स्वरा
स्तुब्राह्मणाज्ञेयावर्गाणांप्रथमाश्चये॥ द्वितीयाश्चतृतीयाश्चचतुर्था
श्चापिभूमिपाः॥ २॥ वर्गाणांपंचमावैश्याअंतस्थाश्चतथैवच॥

 

॥१०॥ कंठ्य। जिव्हामूलीय। तालव्य। मूर्धन्य। दंत्य। ओष्ठ्य। यमावि
सर्जनीयनिपाताद्याश्चकिंवर्णदैवत्यलिंगाः। स्वराः शुक्लाः नाना
दैवत्याः। स्पर्शाःकृष्णाः। कपिलाअंतस्थाः। ऊष्माणोऽरुणाः।
नीलायमाः। हरितानासिक्याः। पीतोनुस्वारः। रक्तोजिह्वामूली
यः। पीतउपध्मानीयः। श्वेतोविसर्जनीयः। शबलोरंगः। नीलोनु
नासिक्यः। इत्यंतर्मध्यमयोर्नासिक्यंविद्यात्॥ द्विरुदात्ताख्याइ ॥१०॥
तिस्मृतः॥ उदमनुदनिपातेआद्येचोपसर्गैनामाख्यातेचोपसर्गनि

पाताश्चेति। किंदैवत्याः। अक्षराणांचकेपुरुषाः।काःस्त्रियः। कानि
नपुंसकानिइत्यत्रब्रूमः। कंठ्याआग्नेयाः। अकारादयः॥ जिव्हा
मूलीयानैर्ऋत्याः ककारादयः। तालव्यः सौम्याः चकारादयः।
वायव्यामूर्धन्याष्टकारादयः। रौद्रादंत्याः तकारादयः। औष्ठ्या
आश्विन्याः पकारादयः। शेषावैश्वदेवाः।अंइत्येवमादयः। स्वरा
स्तुब्राह्मणाज्ञेयावर्गाणांप्रथमाश्चये॥ द्वितीयाश्चतृतीयाश्चचतुर्था
श्चापिभूमिपाः॥ २॥ वर्गाणांपंचमावैश्याअंतस्थाश्चतथैवच॥

या० ऊष्माणश्चहकारश्चशूद्राएवप्रकीर्तिताः ॥ ३ ॥ शुक्लवर्णानिनामा शि०
॥११॥ निआख्यातारोहितामताः ॥ कपिंजलास्तूपसर्गाःकृष्णाश्चैवनि
पातकाः ॥ ४ ॥ भार्गवगोत्राणिनामानिभारद्वाजाआख्याताः ॥
वासिष्ठाउपसर्गास्तुनिपाताःकाश्यपाःस्मृताः ॥ पीतवर्णश्चोपस
र्गोनिपातःकृष्णवर्णकः॥ सर्वंतुसौम्यमाख्यातंनामवायव्यंदृश्य
ते ॥ आग्नेयस्तूपसर्गःस्यान्निपातोवारुणःस्मृतः ॥ ५ ॥ प्रथमाश्च ॥११॥
तथांतस्थाःस्त्रीलिंगाःपरिकीर्तिताः॥शेषाक्षराणिषंढानिप्राहुर्लिंग

विवेचकाः ॥ ६ ॥ नाम्नामिंद्रोदेवतावरुणःउपसर्गाणामादित्यः
सर्वस्याक्षरगणस्यस्वराविसर्जनीयोयमाश्चपुँल्लिंगाः ङञणनमा
यरलवाः स्त्रीलिंगाः । शेषाण्यक्षराणिनपुंसकलिंगानीति ॥ सं
धिश्चतुर्विधोभवतीति ॥ लोपागमौवर्णविकारः प्रकृतिभावश्चे
ति।तद्यथा तत्रलोपोभवति अयक्ष्माः मा अयक्ष्मामा। शतते
जाः वायुः शततेजावायुः। तिग्मतेजाः द्विषतः तिग्मतेजाद्वि
षतः इतिलोपः ॥ आगमोभवतियथा प्रत्यङ्सोमः प्राङ् सोमः

प्राक्सोमः।प्राङ्सोमः अस्मान् सीते अस्मान्त्सीते त्रीन् समुद्रान् 
त्रीन्त्समुद्रान् इतिआगमः॥ विकारोभवति आ इदम् एदम् आ
इमे एमे आ इष्टयः एष्टयः प्र इषितः प्रेषितः इतिविकारः प्रकृति
भावः यथा आशुः शिशानः। युञ्जानःप्रथमम्। अदितिः षोडशा
क्षरेण। देवोवःसविता। इतिप्रकृतिभावः॥ आकाशस्थायथावि
द्युत्स्फुटितंमणिसूत्रवत्॥ एषच्छेदोविवृतीनांयथाबालेषुकर्त्तरि॥
॥७॥ द्वयोस्तुस्वरयोर्मध्येसंधिर्यत्रनदृश्यते॥ विवृतिस्तत्रविज्ञे

यायईशेतिनिदर्शनम् ॥ ८ ॥ पिपिलिकापाकवतीतथावत्सानुसा
रिणी ॥ वत्सानुसंसृताचैवचतस्रस्तुविवृत्तयः ॥ ९ ॥ पंचरंगाःप्र
वर्तंतेघातनिर्घातवर्जिणः ॥ अहरप्रहरोज्ञेय अइउऋओइतिनिदर्श
नं ॥ १० पिपीलिकाआद्यंतदीर्घानाभ्याआसीदितिनिदर्शनम् ॥
पाकवत्युभयोर्ह्रस्वाविनइन्द्रेतिनिदर्शनम् ॥ ११ ॥ अंतेचवत्सा
नुसृजतातानेत्यसौआवोढमाश्विनेतिनि० ॥ वत्सानुसारिणीचा
दौर्दीर्घाताअस्येतिनि० ॥ १२ ॥ करिणीकुर्विणीचैवहरिणीहारि

या० नीतिच ॥ तथाहंसपदानामपंचैताः स्वरभक्तयः ॥ १३ ॥ करिणी शि०
॥१३॥ रुहयोर्योगेकुर्विंणीलहकारयोः ॥ हरिणीरषयोर्योगेहारितंऋषका
रयोः ॥ १४ ॥ यातुहंसमदानामसातुरेफषकारयोः ॥ हरिणीहरयो
र्विंद्यात्कुर्विंणीलहकारयोः ॥ १५ ॥ देवंबर्हिंरितिकरिणीउपव्हरे
तिकुर्विंणी ॥ हरिणींअरेषसइत्याहुर्हारिणीशतवल्हेतिच ॥ १६ ॥
वर्षोवर्षीयतेसीतितथाहंसपदेतिच ॥स्वरभक्तिंप्रयुंजानस्त्रीन्दोषा ॥१३॥
न्परिवर्जयेत् ॥ १७॥ इकारंचाप्युकारंचग्रस्तदोषंतथैवच ॥ एत

लक्षणमाख्यातंयाज्ञवल्क्येनधीमता ॥ १८ ॥ सम्यक्पाठस्यासि
द्ध्यर्थंशिष्याणांहितकाम्यया॥ अर्धमात्रास्वरंकिंचित्पृथङ्न्यून
मिवोच्चरन् ॥ ऋकारेहकारस्तत्कंठमनसानिच ॥ १९ ॥ नैतत्स्वरि
तपूर्वांगेनापरांगेकथंचन ॥ नस्वरेनचमात्रायांकथंस्वारोविधी
यते ॥ २० ॥ परांगस्यतुयत्पूर्वंपूर्वांगस्यतुयत्परं ॥ उभयार्द्धार्द्ध
संयोगेस्वारंकुर्याद्विचक्षणः ॥ २१ ॥ संयोगेतुपरंस्वार्थंपरंसंयोग
नायकम् ॥ संयुक्तस्यतुवर्णस्यनस्वार्थंपूर्वमक्षरम् ॥ २२ ॥ उदा

या० त्तादनुदात्तेतुवामायाभ्रुवआरभेत् ॥ उदात्तात्स्वरितोदात्तौक्रमाद्द शि०
। १४॥ क्षिणतोन्यसेत् ॥ २३ ॥ स्वरितादनुदात्तायेप्रचयांस्तान्प्रचक्षते॥
एकस्वरापिचांतानाहुस्तत्वार्थचिंतकाः ॥ २४ ॥ प्रचयोयत्रद्द
श्येततत्रहन्यात्स्वरंबुधः ॥ स्वरितःकेवलोयत्रमृदुस्तत्रनिपातयेत्
॥ २५॥ दुर्बलस्ययथाराष्ट्रंहरतेबलवान्नृपः ॥ एवंव्यंजनमासाद्य
अकारोहरतेस्वरम् ॥ २६ ॥ उच्चादुच्चतरंनास्तिनीचान्नीचतरंतथा ॥१४॥
॥ अक्षरात्तुल्ययोगाच्चनीचेनीचगतानिच ॥ २७॥ स्वरउच्चःस्व

रोनीचः स्वरः स्वरितएवंच ॥ स्वरप्रधानैस्तैःस्वार्यंव्यंजनंतेनस
स्वरम् ॥ २८ ॥ व्यंजनान्यनुवर्तंतेयत्रतिष्ठतिसस्वरः ॥ स्वरप्रधा
नंत्रैस्वर्यंआचार्याःप्रवदंतिहि ॥ २९ ॥ मणिवद्व्यंजनंविद्यात्सूत्र
वच्चस्वरंविदुः ॥ आचार्याःसममिच्छंतिपदच्छेदंतुपंडिताः ॥ ३०
स्त्रियोमधुरमिच्छंतिविकृष्टमितरेजनाः ॥ उदात्तंनानुवर्तंतेनीच
त्स्वरितंतथा ॥ ३१ ॥ विस्वरंतंविजानीयाद्दीर्घह्रस्वविवर्जित
म् ॥ हरिवरुणवरेण्येषुधारापुरुषेषुच ॥ स्वरितेरेफवैश्वानरोन

कारः शेषाकारः स्वरितानकाराः ॥ ३२ ॥ द्वौवरुणौचस्वरितौ ॥
उदुत्तमंवरुणधारयेवरेरुधाराउरुधाराचह्वोहने ॥ मात्रिकंवाद्विमा
त्रंवास्वरितंयदिहाक्षरम् ॥ तस्यादितोर्द्धमात्रावैशेषंचपरतोभवे
त् ॥ ३३ ॥ नकारांतेपदेपूर्वेंश्मश्रुभिःपरतःस्थिते ॥ छकारंनप्रयुंजी
तत्रशसंधिंसमुच्चरेत् ॥ ३४ ॥ ओकारंप्लुतविज्ञेयंप्लुतमग्राद्वितीयकं
॥ लाजींछाचींतृतीयंचविवेशेतिचतुर्थकं ॥ ३५ ॥ अधःस्विदा
सीत्पंचमंचोपरिस्विदासीच्चषष्ठकं ॥ सप्तमंतुभ्रुवोस्मारअष्टमंनैव

विद्यते ॥ ३६ ॥ उच्चस्थानगतेहस्तेस्वरितंनोपपद्यते ॥ अंधस्थातु
यदागच्छेत्स्वरितंनतदाभवेत् ॥ कचढतपादृश्यंतेसंधिस्थानेषुनि
त्यशः ॥ स्ववर्गेणैवसंयुक्तामोक्षंतत्रनकुर्वीत ॥ तकारांतेपदेपूर्वेस
कारेपरतःस्थिते ॥ प्रत्यारंभंनकुर्वीतपापावितिनिदर्शनम् ॥ कका
रांतेपदेपूर्वेसकारेपरतःस्थिते ॥ खसवर्णंविजानीयात्भिखक्से
तिनिदर्शनम् ॥ तकारांतेपदेपूर्वेचवर्गेपरतःस्थिते ॥ मोक्षंतत्रचकु
र्वीतयच्चपापौनिदर्शनं ॥ ङकारांतेपदेपूर्वेसकारेपरतःस्थिते ॥ कस

 वर्णंविजानीयात्प्राङ्सोमेतिनिदर्शनम् ॥ टकारांतेपदेपूर्वेंसकारेप 
 रतःस्थिते॥टसवर्णंविजानीयात्संम्राट्संभृतेतिनिदर्शनम् ॥ तका
रांतेपदेपूर्वेंसकारेपरतःस्थिते ॥ छसवर्णंविजानीयात्तत्सवितु
रितिनिदर्शनम् ॥ नकारांतेपदेपूर्वेंसकारेपरतःस्थिते ॥ तसव
र्णंविजानीयात्त्रीन्त्समुद्रेतिनिदर्शनम् ॥ पकारांतेपदेपूर्वेंशकारेपर
तःस्थितें ॥ छासवर्णंविजानीयादनुष्टुप्छारदीतिनिदर्शनम् ॥ म 
कारांतेपदेपूर्वेंसवर्णेपरतःस्थिते ॥ मसवर्णंविजानीयादिमम्मेति

निदर्शनम् ॥ वर्णेतुमात्रिकेपूर्वेअनुस्वारोद्विमात्रकः ॥ द्विमात्रेमा
त्रिकोज्ञेयःसंयोगाद्यस्ययोभवेत् ॥ अनुस्वारोद्विमात्रःस्याद्दवर्ण
व्यंजनादिगः ॥ ह्रस्वाद्वायदिवादीर्घाद्देवानाथ्हृदयेभ्यइति ॥ अ
नुस्वारस्योपरिष्टात्संवृतंयत्रदृश्यते ॥ दीर्घंतंतुविजानीयाच्छ्रोता
ग्रावाणेतिनिदर्शनम् ॥ अनुस्वारस्योपरिष्टात्संयोगोयत्रदृश्यते ॥
ह्रस्वंतंतुविजानीयात्सꣳ स्थेतिनिदर्शनम् ॥ अनुस्वारश्चयोदी
र्घादक्षराद्योभवेत्परः ॥ सतुह्रस्वइतिज्ञेयोमंत्रेष्वेवविभाषया ॥

ओभावश्चविवृत्तिश्चशषसारेफएवच ॥ जिव्हामूलमुपध्माचग
तिरष्टविधोष्मणः॥ यथाभावप्रसंधानमुकारादिपरंपदम्॥ स्वरां
तंतादृशंविद्याद्यदन्यद्व्यक्तमूष्मणः ॥ उभावादुत्थितश्चोष्मातातु
केलिंविनिर्दिशेत्॥ विवृत्तंप्रतियाऊष्माविज्ञेयाविकठानना॥ ली
ढातिलीढविद्युच्चशषसेषुप्रकीर्तिताः॥ जिव्हामूलेचरेफेचविज्ञेया
विठकाशठा ॥ उपध्मानीयसहितांपुष्पिणींतांविनिर्दिशेत् ॥ अ
न्यत्रयोभवेदूष्मासुलभातांविनिर्दिशेत्॥पादाद्यंतंपदाद्यंतंतथावग्र

हकालिकं॥ईषत्स्पृष्टंविजानीयात्तस्मिन्कालेतुकारयेत्॥पादादौच
पदादौचसंयोगावग्रहेषुच ॥यःशब्दइतिविज्ञेयोयोन्यःसयइतिस्मृ
तः॥उपसर्गपरोयस्तुपदादिरपिदृश्यते॥ईषत्स्पृष्टंयथाविद्युत्पदछंदा
त्परंभवेत् ॥ त्वदर्थवाचिनौवोवांवावैयदिनिपातजौ ॥ आंदेराज
विकल्पार्थाईषत्स्पृष्टाइतिस्मृताः॥विभाषयामेकारःस्यात्तथानेतै
पदात्परः॥ भवंतेत्यपिपूर्वैवतथाचसपदादपि ॥ यदेवलक्षणंयस्य
वकारस्यापितद्भवेत्॥ यत्रयत्रविशेषःस्यादिदानींससकथ्यते ॥

वकारस्त्रिविधः प्रोक्तोगुरुर्लघुर्लघूतरः ॥ आदौगुरुर्लघुर्मध्येपदांते
चलघूतरः ॥ यवर्णस्त्रिविधःप्रोक्तोगुरुर्लघुर्लघूतरः ॥ आदौगुरुर्ल
घुर्मध्येपदांतेलतुघूतरः ॥ उपांशुत्वरितंचैवयोधीतेत्द्दिसंज्ञकः
॥ अपिरूपसहस्रेषुसदेहेषुप्रवर्तते ॥ पंचविद्यांनगृह्णंतिजडास्तब्धा
श्चयेनराः ॥ आलस्याश्चैवरोगाश्चयेषांचविस्मृतंमनः ॥ अहिरिव
गुणाद्भीतः संमानान्नरकादिव ॥ राक्षसीभ्यइवस्त्रीभ्यः सविद्याम
धिगच्छति ॥ नभोजनविलंबीस्यान्नचनारीनिबंधनः ॥ सुदूरम

पिविद्यार्थीव्रजेद्गुरुडहंसवत् ॥ यथानखात्खनित्रेणनरोवार्यधिग
च्छति ॥ तथागुरुगतांविद्यांशुश्रूषुरधिगच्छति ॥ सुखार्थीचेत्त्य
जेद्विद्यांविद्यार्थीचेत्त्यजेत्सुखम् ॥ सुखिनस्तुकुतोविद्यासुखंवि
द्यार्थिनःकुतः ॥ गुणिताशतशोविद्यासहस्रावर्तितापुनः ॥ आगमि
ष्यतिजिह्वाग्रेस्थलनिम्नमिवोदकम् ॥ शतेनगुणिताविद्यासहस्रेण
चतिष्ठति ॥ शतानांचसहस्रेणप्रत्यंचदवातिष्ठति ॥ जलमभ्यास
योगेनशिलायांकुरुतेक्षयं ॥ कर्काणांमृदुतस्तस्यकिमभ्यासान्न

या० साध्यते ॥ गुरुशुश्रूषयाविद्यापुष्कलेनधनेनवा ॥ अथवाविद्यया शि०
॥११॥ विद्याचतुर्थंनोपलभ्यते ॥ शुश्रूषारहिताविद्याह्यल्पमेधागुणैःसह
॥ वंध्याचयौवनीतस्यानविद्याफलिनीभवेत् ॥ हयानामिवजा
त्यानामर्धमात्रार्द्धशायिनाम् ॥ नहिविद्यार्थिनांनिद्राचिरंनेत्रेषुति
ष्ठति ॥ यथा ॥ पिपीलिकाभिःपांसुभिर्वल्मीकंक्रियतेमहान् ॥ न
तत्रबलसामर्थ्यमुद्यमस्तत्रकारणम् ॥ अंजनस्यक्षयंदृष्ट्वावल्मीक ॥११॥
स्यतुसंचयं ॥ अवंध्यंदिवसंकुर्याद्दानाध्ययनकर्मसु ॥ अन्नव्यं

जनयोर्भागस्तृतीयमुदकस्यच ॥ वायोःसंचारणार्थायचतुर्थमुप
कल्पयेत् ॥ हकारंपंचमैर्युक्तमंतस्थैश्चापिसंयुतं औरसंतंविजानी
यात्कंठ्यमाहुरसंयुतं ॥ हकारोयत्रपूर्वस्थोअंतस्थाद्योभवेत्परः ॥
पदकालेवियुज्येतसंहितायांसऔरसः ॥ मेघदुंदभिनिर्घोषोज्ञाय
तेपयसोहृदात् ॥ एवंनादंप्रयोक्तव्यंसिंहस्यरुदितंयथा ॥ मासेभा
द्रपदेमेघाःशब्दंकुर्वंतियादृशम् ॥ एवंगव्हरमासाद्यशुकंदुदुन्हेतिदर्श
नं ॥ शेषाणांवानरायुद्धमुत्पतंतिपतंतिच ॥ एवंवर्णाःप्रयोक्तव्या

या० इहेहैषान्निदर्शनम् ॥ यथापुत्रवतीस्नेहाच्चुंबतेनिजमौरसम् ॥ एवं शि०
।२०॥ वर्णाःप्रयोक्तव्यायुञ्जानेतिनिदर्शनं ॥ दुर्दरोदयदेशेचप्रफतेषुर्नया
प्ययया ॥ एवंवर्णाः प्रयोक्तव्या अपांफेनेतिनिदर्शनम् ॥ यथाभा
रभराक्रांतानिश्वसंतिनराभुवि ॥ एवंवर्णाः प्रयोक्तव्या अञ्चःसं
भृतइत्यपि ॥ कुक्कुटःकामलुब्धश्चककारद्वयमुच्चरेत् ॥ एवंवर्णाः
प्रयोक्तव्याःकुक्कुटोसीतिदर्शनम् ॥ वडवाचहयंदृष्ट्वायोनिंविकुरुते ॥२०॥
यथा ॥ एवंवर्णाःप्रयोक्तव्याःसदुंदुभेतिदर्शनम् ॥ रंगेचैवसमुत्पन्ने

नोग्रसेत्पूर्वमक्षरम् ॥ स्वरंदीर्घंप्रयुंजीतपश्चान्नासिक्यमाचरेत् ॥
यथासौराष्ट्रिकानारीअराँइत्यभिभाषते ॥ एवंरंगःप्रवक्तव्योङ्का
रः परिवर्जितः ॥ द्विमात्रिकोमात्रिकोवानासामूलंसमाश्रितः ॥
अंतेप्रयुंजतेरंगःपंचमैः सानुनासिकः ॥ यथासौराष्ट्रिकानारी
अराँइत्यभिभाषते ॥ एवंरंगंविजानीयात्ङ्कारपरिवर्जितम् ॥अ
नंतरंमकारस्ययोरंगस्तत्ररंज्यते ॥ सर्वानुनासिकंविंद्यादेषामध्यो
पधानिका ॥ यरलवशषसहरज्यंतेचोपधानिका ॥ वर्गांतेरंग

या० तेयस्तुसर्वैःसर्वानुनासिका ॥ नासादुत्पद्यतेरंगः कांस्येनसमनिः शि०
॥२१॥ स्वनः ॥ मृदुश्चैवद्विमात्रःस्याद्दृष्टिमान्स्यान्निदर्शनम् ॥ यथाव्या
घ्रीहरेत्पुत्रान्दंष्ट्राभिर्नचपीडयेत् ॥ भीतापतनभेदाभ्यांतद्वद्वर्णान्प्र
योजयेत् ॥ मधुरंचनचाव्यक्तंव्यक्तंचापिनपीडितम् ॥ सनाथस्यै
कदेशस्यनवर्णाःशंकरंगताः ॥ यथासुमत्तनागेंद्रःपदात्पदंनिधाप
येत्॥एवंपदंपदाद्यंतंदर्शनीयंपृथक्पृथक्॥गीतीशीघ्रीशिरःकंपीय ॥२१॥
थालिखितपाठकः॥अनर्थज्ञोल्पकंठश्चषडेतेपाठकाधमाः॥माधुर्य

मक्षरंव्यक्तिः पदच्छेदस्तुसुस्वरः ॥ धैर्यंलयसमत्वंचषडेतेपाठकागु
णाः ॥ चतुरक्षरषट्कंचनिवर्तेतपुनःपुनः ॥ आवर्ततेपदंयच्चद्विस्त्रिरा
म्रेडितंहितत् ॥ यथा धाम्नेधाम्नेतियजुषेयजुषेतिनिदर्शनम् ॥ ही
यतेवर्धतेचापिपदंयत्नकृशोदरम् ॥ उपचारःसविज्ञेयउभेसुश्चंद्रे
तिनिदर्शनम् ॥ ॥ अथसप्तविधाःसंयोगपिंडाः ॥ ॥ अयःपिंडोदा
रुपिंडऊर्णापिंडोज्वालापिंडोमृत्पिंडोवायुपिंडोवज्रापिंडश्चेति ॥ य
मान्विद्यादयःपिंडान्सांतस्थंदारुपिंडवत् ॥ अंतस्थंयमवर्जंतुऊ

या० णीपिंडंविनिर्दिशेत् ॥ अंतस्थंयमसंयोगेविशेषोनोपलभ्यते ॥ अ शि०
॥२२॥ शरीरंयमंविद्यादंतस्थःपिंडनायकम् ॥ ज्वालापिंडान्सनासिक्या
न्सानुस्वारांस्तुमून्मयान् ॥ सोपध्मावायुपिंडाश्चजिव्हामूलेतुव
ज्रिणः ॥ अयःपिंडोनामयथा। अग्नीः। पक्तीः। नातनच्चिम । दारु
पिंडोनामयथा। अश्वः। सूर्यः। विश्वाजतीतिभवति। तत्रऊर्णा
पिंडोनामयथायस्मिन्। अत्यस्मिन्। अमुष्मिन्। इतिभवति ॥ ॥२२॥
तत्रज्वालापिंडोनामयथा। ब्रह्मा। वन्हिः। गृह्णामीतिभवति। तत्र

मृत्पिंडोनामयथा । साथ स्थासथ स्कर्त्तार । सथ स्वर्तइति । तत्र वायुपिंडोनामयथा । देवसवितः । युञ्जानः प्रथमम् ॥ प्रादिवःककुत्सुप्तमितिभवति ॥ तत्रवज्रपिंडोनामयथा । इष्कृतिः निष्कृतिः । ऋक्सामइतिभवति ॥ प्रथममेवषकारेणसकारेणैवसंयुतं ॥ एतत्स्वरंसमासाद्यअग्निष्वात्तान्निदर्शनम ॥ प्रथमेनठकारेणथकारेणैवसंयुतम् ॥ एतत्स्वरंसमासाद्यअधिष्ठाननिदर्शनम्॥ प्रथममेवणकारेणनकारेणैवसंयुतम ॥एतत्स्वरंसमासाद्यत्रिणवत्रयस्त्रिंशा

या॰ विर्तिनिदर्शनम् ॥ प्रथममेवरंगेणनकारेणैवसंयुतम् ॥ एतद्द्वाजित शि॰
॥२३॥ मासाद्यवृष्टिमानितिनिदर्शनम् ॥ एतेककारादयोमकारपर्यवसा
नाः कृष्णाव्याख्याताः । शनैश्चरदैवत्याः । चत्वार्यंतस्थायरल
वाः कपिलवर्णाः अग्निदैवत्याः । चत्वार्यूष्माणः शषसहा अरुण
वर्णाः आदित्यदैवत्याः ॥ त्रयस्त्रिंशव्द्यंजनानि स्पर्शाअंतस्था
ऊष्माणश्चेति । चतुर्विधंकरणम् ॥ स्पृष्टमस्पृष्टसंवृतंविवृतंचेति ॥ ॥२३॥
संवृतोघोषाविवृताअघोषाः । विंशतिर्घोषास्तेगजडदबाघझढ

धभाङञणनमाःयरलवाश्चेति । त्रयोदशअघोषास्तेकचटतपाः खछठथफाःशषसाश्चेति ॥ अष्टौवर्णस्थानानिभवंति । उरः कंठ्यमूर्धन्यतालुदंत्योजिह्वामूलयमानुनासिक्याश्चेति । द्वौऔर स्यौह। हाइति अआआ ३ त्रयःकंठ्याः ऋषट्मूर्द्धन्याः। टठडढ णष ३ इति । दशतालव्याः। चछजझञयशइईई ३ इति । अष्टदंत्याः। तथदधनऌलसाः।एकादशओष्ठ्याः।पफबभमाउऊऊ३ छ उपध्माचेत्यादयः । एकोदंतमूलीयोरेफः । जिह्वामूलीयाःपंच ।

या॰ कुंखुंगुंघुंङुंइति । कमरूमगमघमकुंखुंगुंघुंइतियमाश्चत्वारः ॥ रुक्मे शि॰
॥२४॥ तिप्रथमोज्ञेयः सकूइत्यपरोभवेत् । तृतीयःसङ्गइत्याहुः उपघ्मेति
चतुर्थकः ॥ प्रथमौचौष्ठनासिक्यौद्वितीयः कंठ्यदंत्यश्च । नासामू
लमुपाश्रितः ॥ तृतीयःकंठ्यजिव्हाग्रेनासायामेवनिर्दिशेत् ॥ चतु
र्थंत्हृदिनासिक्यः कंठेचाभिहितायमाः ॥ आपंचमैश्चैकपादःसंयु
क्तंपंचमाक्षरम् ॥ यमास्तत्रनिवर्त्ततेश्मशानादिवबांधवाः । यत्किं ॥२४॥
चिद्वाङ्मयंलोकेसर्वमत्रप्रतिष्ठितम् ॥ सर्वमत्रप्रतिष्ठितमिति ॥ क्र

श्रीशायनमः॥ मंडलंदक्षिणमक्षिन्दंयेनशुक्लानियजू
थंषिभगवान्याज्ञवल्क्योयतः यीमयमर्चिष्मंत
मभिध्यायमाध्यंदिनीयेवाज नोम्नायेसर्वैसखिलेस
शुक्रियऋषिदेवतछंदांस्यनुक्रमिष्यामनियताक्षरत्वा
देकेषांछंदोनविद्यतेद्रष्टारऋषयस्रष्ट्यादयोदेवतामंत्रां
तर्भूताग्न्यादिकाहविर्भाजस्तुतिः शाखोखाशम्यो
पवेषकपालेध्मोलूखलादयश्चताश्छंदांसिगायत्र्यादी

॥ ॥ ॥ ॥ द्वे वे ाम्न ाह

स.नु. न्येतान्यविदित्वायोधीतेनुब्रूतेजपतिजुहोतियजतेयाजयतेतस्य सू.१
॥ १ ॥ ब्रह्मनिर्वीर्यंयातयामंभवत्यथांतराश्वगर्त्तंवापद्यतेस्थाणुंवर्छति १
प्रमीयतेवापापीयान्भवत्यथविज्ञायैतानियोधीतेतस्यवीर्यवदथ
योर्थवित्तस्यवीर्यवत्तरंभवतिजापित्वाहुत्वेष्ट्वातत्फलेनयुज्यते ॥
॥ १ ॥ इषेत्वादिखंब्रह्मांतंविवस्वानपश्यत्ततःप्रतिकर्मविभागेन
ब्राह्मणानुसारेणऋषयोवेदितव्याःपरमेष्ठीप्राजापत्योदर्शपूर्णमा ॥ १ ॥
समंत्राणामृषिर्देवावाप्राजापत्याइषेत्वाशाखानुक्त्विनियोगःक

लपकारोक्तएवमूर्ज्जैत्वावायवोवायव्यंदेवोवऐंद्रंयजमानस्यशा
षावसोर्वायव्यंद्यौर्मातरिश्वनउरवावसोर्वायव्यंदेवस्त्वापयःका
मधुक्षः प्रश्नःसाविश्वायुस्त्रीणिगव्यानींद्रस्यैंद्रंविष्णोपयः ॥२॥
यो ॥ अग्नइदमाग्नेये ॥ कस्त्वाप्राजापत्यंकर्मणेस्रुकूशूर्पंप्रत्युष्टंद्वे
राक्षसेउरुबह्मरक्षोघ्नठंसर्वत्रधूरसिधूर्द्देवानांविष्णुस्त्वानऽउरुहवि
ष्याऽअपहतठंरक्षोयच्छंताठंहविष्यादेवस्यत्वासावित्रठंसर्वत्राग्न
येलिंगोक्तेभूतायत्वाहविःस्वःसूर्यौद्दृठंहंतांगृहाःपृथिव्यास्त्वाह

स.नु. व्यंपवित्रेलिंगोक्तंसवितुर्देवीः प्रोक्षितआपान्यग्नयेलिंगोक्तेदै सू.अ.
॥२॥ व्यायपात्राणि ॥३॥ शर्मास्यदित्याःकृष्णाजिनंअवधूतं राक्ष १
समद्रिर्ग्रावौलूखलेअग्नेर्हविर्बृहत्सइदम्मौसहविष्कृदाधिदैवतंवा
गधियज्ञंपत्नीकुक्कुटोवाग्वर्षवृद्धंशूर्पंप्रतित्वहविःपरापूतमपह
तंरक्षसेवायुर्वोदेवोवस्तंडुलाधृष्टिरूपवेषोऽग्न आदेवयजमा
ग्नयेध्रुवमसिषंणांकपालान्यग्नेब्रह्माग्नेयंधिषणसिदार्षदंदिवःश
म्याधिषणोपलंधान्यमसिषंणार्थंहविर्महीनामायुर्थं ॥४॥ सं ॥२॥

न्वपामिहविः समाप आपंजनयत्त्यैत्वेदर्ठंहविरिषेत्वाज्यंघर्मो
सिषंणांपुरोडाशस्त्रितायत्त्रयाणांत्रितोद्वितएकतः क्रमेणाददइंद्रस्य
स्फ्यः पृथिविवेदिर्व्रजंपुरीषंवर्षतुवेदिर्बधानसावित्रमपाररुमररो
आसुरेद्रप्सस्तेवेदिर्गायत्रेणत्त्रीणिवैष्णवानिसुक्ष्मात्त्रयाणांवेदिः
पुराघश ठं सोपश्यच्चांद्रमसीत्रिष्टुभंप्रोक्षणीःप्रेषोद्विषतःआभिचा
रिकमनिशितःस्रुवोनिशितास्रुगदित्यैविष्णोर्यौक्रमूर्ज्जैत्रयाणामा
ज्यर्ठं सवितुरापंतेजोसिधामाज्यं ॥ ५ ॥ कृष्णोसीध्मोवेदिर्बर्हि

स.नु. लिंगोक्ते ॥ अदित्या आपंविष्णोः प्रास्तरमूर्णम्रदसंवेदिर्भुवपतये सू.अ.
॥ ३ ॥ त्रीण्याग्नेयानिगंधर्वस्त्रयाणांपरिधयोवीतिहोत्रंव्विश्वावसुराग्ने
यींगायत्री ठं सामिदाग्नेय ठं सुर्षस्त्वालिंगोक्त ठं सवितुर्विधृतीऊ १
र्णम्रदसमात्वाप्रास्तरेघृताच्यसित्रयाणांजुहूपभृर्ध्रुवाःक्रमेणप्रिये
णहविर्ध्रुवा असदन्पाहिमांवैष्णवे अग्नेवाजजिदाग्नेयंनमोदेवथं
स्वधापित्र्य ठं सुयमेस्तुचावंघ्रिणावैष्णवंवसुमतीमाग्नेयमितऐंद्र
ठंसंज्योतिषाज्यंमर्यीदमाशीप्रतिग्रहणमुपहूताद्यावापृथिव्यम् ॥ ॥ ३ ॥

॥ ६॥ ब्रह्मत्वंप्रतिष्ठांतं॥बृहस्पतिरांगिरसोपश्यत्दग्नेष्ट्वाप्राशित्रमेतं
तेवैश्वदेवमेषातेनुष्टुबाग्नेय्यग्नेवाजजिदाग्नेयमग्नीषोमयोश्चत्वारि
लिंगोक्तानिवसुभ्यस्त्रयणांपरिधयः संजानाथाव्यंतुप्रास्तरेमरु
तांकपिर्बृहतींप्रास्तरीमंत्यः पाद आग्नेयोषंपरिधिंदेवल आग्नेयीं
त्रिष्टुभंविराड्रूपांयजुरंतामग्नेः प्रियंयजुःसर्वंस्त्रवभागाः सोमसु
क्ष्मोवैश्वदेवींत्रिष्टुभंयजुरंताथंस्वाहावाडयजुर्घृताचीस्रुचौयज्ञन
मः शूर्पंयवमान्कपिरुद्दालवांधानांतर्वानितिपंचार्षंयोयज्ञोदेव

स.नु. तामेदध्यायोगार्हपत्योग्नयेदक्षिणाग्निः सरस्वत्यैलिंगोक्तंवेदोसिवे सू.अ
॥४॥ दोदेवामनसस्पतिर्वातदेवत्यांविराज ठं संबर्हिर्लिंगोक्तात्रिष्टुब्वि १
राड्रूपाकस्त्वाप्राजापत्यर्ठंरक्षसार्ठंराक्षसम् ॥ ७ ॥ अथयाजमा
न ठं संवर्च्चसात्वाष्ट्रीत्रिष्टुब्द्विविविष्णुस्त्रीणिवैष्णवान्यस्माद्भागो
स्यैभूमिरगन्नदेव ठं संज्योतिषाहवनीयः स्वयंभूः सूर्यस्यसौरेअ
ग्नेगृहपतेगार्हपत्यः सूर्य्यस्यसौरमग्नइदमाग्नये ॥ ८ ॥ पितृयज्ञःप्रजा ॥४॥
पतेरार्षंमग्नयेसोमायद्वेदैवेस्वाहाकारश्रुतेरपहता असुरायेरूपाणि

कव्यवाहनोग्निस्त्रिष्टुबत्रामीमदंतपितृभ्यैनमोवः षड्लिंगोक्तानिपरे
पितृभ्ये आधत्तपितृभ्यागायत्र्युर्जमापिविराट् ॥९॥ अग्न्याधेयंप्रजा
पतेरार्षं ॥ देवानामग्नेर्गंधर्वाणांवासमिधाग्नेश्यश्वतस्रोगायत्र्यः स
मिधाविरूपआंगिरसः सुसमिद्धायवसुश्रुतस्तंत्वाभरद्वाजोभूर्भु
वः स्वः स्तिस्रोमाहाव्यात्हतयोग्निवायुसुर्यदेवत्याःक्रमेणद्यौरिव
यजमानाशीर्लिंगोक्तदेवतायंगौःसार्पराज्ञसृचोगायत्र्योग्निःपरा
वररूपेणदेवता ॥ १० ॥ अग्निहोत्रंप्रजापतेरार्षं ॥ मग्नीज्यौं

स.नु. तिः सप्तलिंगोक्तदेवतागायत्र्यआद्याः पंचैकपदाअग्निर्वर्च्चौद्वैत सू.अ.
॥ ५ ॥ क्षापश्यत्परांजीवलश्चैलकिः ॥ ११ ॥ यजमानाभ्युपस्थानंबृह १
द्देवानामार्षं ॥ उपप्रयंतइत्यनुवाकआद्येद्वेआग्नेय्यौगायत्र्यावुपव
त्यागोतमोराहूगणोमूर्द्धन्वत्याविरूपउभावांभरद्वाजऐंद्राग्नींत्रिष्टुं
भमयंतेदेवश्रवादेववातश्चभारतावाग्नेयीमनुष्टुभमयमिहवामदे
वोजगतीमस्यप्रत्नामवत्सारोगव्यांवाग्नेयींवापयोदेवत्यांवागा
यत्रींतनूपाआग्नेयानींधानाआग्नेयींमहापंक्तिरुद्‌यवसाना ॥ १२ ॥ ॥ ५ ॥

चित्रावसोरात्रिदेवत्यमृषयोपश्यंन्त्संत्वमाग्नेयमंधस्थरेवतीःसर्ठं
हितेतित्रीणिगव्यांन्युपत्वाग्नेयंतृचंगायत्रंमधुछंदावैश्वामित्रोग्ने
त्वंचतस्रोद्विपदा आग्नेयीर्बंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुरैकैकशइडे
काम्यागव्येसोमानंब्रह्मणस्पत्यंतृचंगायत्रंब्रह्मणस्पतिर्मेधाति
थिर्वामहित्रीणाठं सत्यधृतिर्वारुणिरादित्यदैवतंतृचंगायत्रंपथि
स्वस्त्ययनंकदाचनैंद्रींपथ्याबृहतींमधुछंदास्तत्सवितुर्विश्वामि
त्रःसावित्रींगायत्रींपरितेवामदेवआग्नेयींमानिरुक्तांगायत्रीं॥१३॥

त.नु. क्षुल्लकोपस्थानमासुरेरार्षं ॥ भूर्भुवः स्वः प्रवत्स्यदुपस्थानमागतो सू.अ.
६ ॥ पस्थानंचादित्यस्यार्षंनर्षंगार्हपत्यःशर्ठंस्याहवनीयोथर्वदक्षिणा १
ग्निरागन्माहवनीयोनुष्टुबयमग्निर्न्यंकुसारिणीबृहतीगार्हपत्योयम
ग्निरन्वाहार्यपचनोनुष्टुबगृहामात्रिष्टुधिराड्रूपायेग्मषानुष्टुबुपहूता
महापंक्तिस्त्यवसानास्तिसोपिवास्तवीःशंयुर्बार्हस्पत्यः ॥ १४ ॥
चातुर्मास्यानिप्रजापतेरार्षं ॥ प्रघासिनोमारुतीगायत्रीषड्रामनोरु
त्यनुष्टुबनिरुक्तामोषुणोगस्त्यऐंद्रामारुतींविराजमकंनिरुक्ताग्ने ॥ ६ ॥

ष्यनुष्टुबवभृथयज्ञदैवतंपूर्णादर्विद्वे और्णवाभऐंद्र्यावनुष्टुभावक्षंद्वे
गोतमऐंद्र्यौपंक्तीमनोनुमानसंतृचंबंधुर्गायत्र्नंवयर्ठ्सौमींगायत्रीं
बंधुरेषतेद्वेरौद्रेअवरुद्रः रौद्र्यावेकापंक्तिरपराककुबूत्र्यंबकंद्वे अनु
ष्टुभौपूर्वस्यांवसिष्ठ एतदास्तारपंक्तिस्त्र्यायुषंनारायणउष्णिहंय
जमानाशीर्षर्ठ्शिवोनामक्षौरंनिवर्तया।मिलिंगोक्तदैवतमाशीःप्रा
यम् ॥ १५ ॥ अग्निष्टोमः प्रजापतेरार्षं ॥ एदंद्वे अत्यष्टीत्यवसा
ने आद्यावर्द्धचौंदेवयजनदेवत्याविमाआपओषधेकुशतरुणर्ठं

स.नु. स्वधितेक्षौरमापोऽअस्मानापंदीक्षातपसोर्वासोमहीनांनवनीतं सू.अ.
।७॥ वृत्रस्यांजनंचित्पतिर्द्वैप्राजापत्येदेवोमासावित्रमावोदैव्यनुष्टुबा १
सीस्वाहायज्ञंचतुर्णांयज्ञआकूत्यैचतुर्णामौदृंभ्णानामग्निरापोदे
वीलिंगोक्तदेवताविराट् ॥ १६ ॥ विश्वोदेवस्यस्वस्त्यात्रेयः ॥ सा
वित्रीमनुष्टुभमृक्सामयोः कृष्णाजिनेशर्मासिकृष्णाजिनमृग
स्यांगिरोभिर्दृष्टंमैखल ठं सोमस्यनीविर्विष्णोर्वासइंद्रस्यसुस ॥७॥
स्याःकृष्णविषाणोच्छ्रयस्वदंडोव्रतंयज्ञोदैवींधीर्येदेवावाक्प्राणो

दानौचक्षुः श्रोत्रमध्यात्ममग्निर्मित्रावरुणावादित्योविश्वेदेवाअ
धिदैवत ठं श्वात्राआपीजगतीयंतेलोष्टमपोमूत्रंपृथिव्यालोष्टमग्ने
त्वमाग्नेयनुष्टुप्पुनर्मन आग्नेयंत्वमग्नेवत्सआग्नेयींगायत्रीठं रास्वे
यत्सौम्यमेषातेहिरण्याज्यदैवतंजूरसिवाग्दैवत ठं शुक्रमसिहिर
ण्यंचिदसिगौःसोमक्रयणीवाग्रूपाध्यारोपकल्पनया॥१७॥वस्व्य
स्यनुष्टुप्बृहतीवासोमक्रयण्यास्तुतिरदित्याआज्यमस्मेषण्णां
लिंगोक्तादेवताः समख्येपत्न्याशीरास्तारपंक्तिरेषतेलिंगोक्तदेवत

मास्माकोसिसौम्यमभित्य ठं सावित्र्यष्टिः प्रजाभ्यस्त्वाप्रजा
स्त्वाशुक्रंत्वासौम्यानिसग्मेस्मेलिंगोक्तेतपसोर्द्धंजार्द्धंसोमोमित्रो
नइंद्रस्यसौम्येस्वानादीनिधिष्ण्यानामानिपरिमाग्नेयीपुरस्ताद्बृह
तीप्रतिपंथामनुष्टुप्पथिदेवत्यादित्याःकृष्णाजिनमदित्यैसौम्यम
स्तभ्नात्रिष्टुभौवारुण्यौसूर्यस्यानुष्टुपूकृष्णाजिनमुस्रावूर्ध्वबृहत्या
नडुहीभद्रोमेसौम्यंनमोमित्रस्याभितपनःसूर्यःसौरींजगतींवरुणस्य
पंचवारुणानियातेसौमीत्रिष्टुभंगौतमः१८अग्नेस्तनूरसिपंचवैष्णवान्य

ग्नेः शकलंवृषणादर्भंतरुणेकेउर्वश्यसित्रयाणांलिंगोक्तादेवतागा
यत्रेणत्रीण्याग्नेयानिभवतंनः पंक्तीरग्नावग्निर्विराडेतयोर्निर्मथ्याह
वनीयावग्नीदेवते आपतयेवायव्यमनाधृष्टमाज्यमग्नेव्रतपा आग्ने
यम ठं शुर ठं शुःप्रकृतिश्चतुरवसानासौम्यंत्योर्द्वचौलिंगोक्तदेव
तोषातेत्रीण्याग्नेयानितप्तायनीचत्वारिपार्थिवानिविदेदाग्नेयमग्ने
अंगिरोषोस्यामनुत्वालिंगोक्तानिसिंहंह्यसित्रयाणांवेदिरिंद्रघोष
श्चतुर्णामुत्तरवेदिरिदमहमाप ठं सिंहंह्यसिपंचानांवाग्भूतेभ्यःस्रु

स.नु. ग्ध्रुवोसिपरिधयस्त्रयाणामग्नेःसंभारागुल्गुल्बादयः ॥ १९॥ युंजते सू.अ.
॥ ९ ॥ श्यावाश्वः ॥ सावित्रींजगतीमिदंविष्णुर्मेधातिथिर्वैष्णवींगायत्री १
मिरावतीवसिष्ठस्त्रिष्टुभंदेवश्रुतावक्षधुरौप्राचीस्त्वंगोष्ठमत्रहविर्द्धा
नेविष्णोर्नुतिस्रोवैष्णव्यस्त्रिष्टुभ आद्येद्वेयजुरंतेत्रिष्णोर्नुप्रतद्दीर्घंत
मा ओतथ्यो विष्णोररराटंपंचवैष्णवान्याददेभ्रिरिदमहठं रक्षोघ्नंबृ
हन्नौपवर्णीदमहंपंचलिंगोक्तानिस्वराडस्यौपवर्णाणिचत्वारिरक्षो
हणोवःसप्तवैष्णवानियवोसियवोदिवेत्वौदुंबरीशुधंतांपित्र्येउद्दिवं ॥ ९ ॥

पंचानामौदुंबरिघृतेनद्यावापृथिव्यमिंद्रस्यैंद्रंपारित्वामधुच्छंदाअ
निरुक्तामैंद्रीमनुष्टुभमिंद्रस्यैंद्राणित्रीणिचतुर्थंवैश्वदेवम् ॥ २० ॥
विभूरस्यष्टानांधिष्ण्याअग्नयः ॥ संम्राडाहवनीयः परिषद्योबहि
ष्पवमानदेशोनभोसिचात्वालोमृष्टोसिशामित्रऋतधामौदुंबरीस
मुद्रोसिब्रह्मासनमजोसिशालाद्वार्योहिरसिप्राजहितोवागसिसद
ऋतस्यद्वार्येअध्वनाथंसूर्योमित्रस्यर्त्विजोग्नयोधिष्ण्याः ॥ २१॥
ज्योतिरसिवैश्वदेवं॥त्वꣳ सोमक्रतुभार्गवःसौमींगायत्रीमनवसा

नांजुषाणो अप्तुदेवत्यैकपदाविराड्यजुरंताग्नेनयागस्त्यआग्नेयीं
त्रिष्टुभमयन्नास्त्रिष्टुब्यजुंरताग्नेब्युरुविष्णोवैष्णव्यनुष्टुब्यजुरंतादेव
सवितः सावित्रमेतच्च ॐ सौम्यथंस्वाहानिर्लिंगोक्तदेवतामग्नेव्रत
पा आग्नेयमत्यन्यान्वनस्पतिरोषधेकुशतरुणथंस्वधितेपरशुर्द्यां
मातस्त्वंवनस्पतिः ॥ २२ ॥ अग्रेणीः शकलं ॥ देवस्त्वायूपः सु
पिप्पलाभ्यश्चबालंद्यामग्रेणयूपोषातेदीर्घतमायूपदेवत्यांत्रिष्टुभंब
ह्लवनिबद्धहद ॐ हयूपदेवत्येविष्णोः कर्माणिद्वेमेधातिथिर्वैष्णव्यौ

गायत्र्यौपरिवीर्षूपोदिवस्स्वरुरेषतेयूपउपावीस्तृणमुपदेवांलिंगो
क्तमृतस्यत्वापशुरग्नीषोमाभ्यांलिंगोक्तमञ्ज्योपांपशुरापोदेवीराप
ठंसंतेपशुर्घृतेनस्स्वरुशासौरेवतीवाग्वर्षौतृणथंस्वाहादेवे ॥ २३ ॥
माहिर्भूरज्जुर्नमस्तेयज्ञोदेवीरापोर्द्धमापमर्द्धमाशीर्व्राचंतेमनस्तेप
शुः शंलिंगोक्तमोषधेतृणथंस्वधितेसीरक्षसांलिंगोक्तंनिरस्तामि
दमहठं रक्षोहणीघृतेनद्यावापृथिव्यंवायोवायव्यमग्निराज्यस्या
ग्नेयथंस्वाहाकृतेवपाश्चपण्याविदमापआपीमहापंक्तिरुग्यवसाना

स.नु. पावमानश्चांत्यःपादःसंतेत्हृदय ठंरेडसिवसाप्रयुतंलिंगोक्तंघृतंवै सू.अ.
॥११॥ श्वदेवंदिशः पंचदिश्यान्यैंद्रः प्राणः पश्वंगः प्राणदानंलिंगोक्तंदेव १
त्वाष्ट्रीत्रिष्टुप्॥२४समुद्रंलिंगोक्तानिद्वादश॥दिवंतेस्वरुर्मापोत्हृदय
शूलंधाम्नोधाम्नोवारुणंयदाहुर्वारुणीगायत्र्यनवसानासुमित्रिया
नआपठंहविष्मतीर्लिंगोक्तदेवतानुष्टुबग्नेर्वश्वत्वार्षापाद्न्यमूरापीं
गायत्रींमेधातिथिर्हदेत्वासौम्यनुष्टुप्सोमराजन्त्सौम्येशृणोतुलिं
गोक्तदेवतात्रिष्टुब्देवीरापऽआपीपंक्तिःकार्षिराज्यमनुष्टुप्समुद्रस्य ॥११॥

समापआपेष्षमग्नेमधुच्छंदाआग्नेयींगायत्रीमाददेग्रावानिग्राभ्या
आपमिंद्रायत्वापंचसौम्यानिषत्तेसौमीविपरीताबृहतीश्वात्राः
पथ्याबृहतीमाभेः सौम्यमर्द्धंद्यावापृथिव्यमर्द्धंप्रागपाक्सौम्यु
ष्णिक्त्वमंगगोतमऐंद्रींपथ्याबृहतीम् ॥ २५ ॥ वाचस्पतयेप्रा
णदेवत्याविराट् ॥ मधुमतीलिंगोक्तंषत्तेसौम्यथंस्वाहोरुयजुषी
लिंगोक्तेस्वांकृतोस्युपाथंशुर्देवेभ्यस्त्वादेवदेवाथंशोलिंगोक्तमा
भिचारिकंप्राणायाग्रहोव्यानायउपाथंशुसवनउपयामगृहीतो

स.नु. स्यंतरैंद्रमंतस्तेमघवद्देवत्यात्त्रिष्टुबुदानायग्रहआवायोवसिष्ठोवा सू.अ.
१२॥ यव्यांत्रिष्टुभमिंद्रवायूमधुछंदाऐंद्रवायवींगायत्रीमयंवांगृत्समदो १
मैत्रावारुणीर्ठराायावयंत्रसदस्युस्त्रिष्टुभंयावांमेधातिथिराश्विनीं
गायत्रींतंप्रत्नथावत्सारः काश्यपोवैश्वदेवींजगतीमच्छिन्नस्यसौ
म्यर्ठ सात्रथमैंद्रीत्रिष्टुप्तृंपंत्वयाऽग्नीलिंगोक्ते ॥ २६ ॥ अयंवेनो
वेनस्यत्रिष्टुप्सोमस्तुतिरधिदैवतमधियज्ञंचमनोनत्रिष्टुप्सोमस्तु ॥१२॥
तिरधियज्ञानुवादिन्यपमृष्टःशंडोपमृष्टोमर्कआभिचारिकेदेवा

स्त्वाशुक्रामंथिनावनाधृष्टासिदक्षिणोत्तरवेदिश्रोण्यौसुवीरः सुप्र
जाः शुक्रामंथिनौनिरस्तोद्वेआभिचारिकेशुक्रस्यमंथिनः शकलं
येदेवासःपरुच्छेपोवैश्वदेवींत्रिष्टुभमाग्रयणोसिलिंगोक्तदैवतम् ॥
॥ २७ ॥ सोमः पवतेवैश्वदेवमिंद्रायत्वापंचलिंगोक्तानिमूर्द्धानंभ
रद्वाजोवैश्वानरींत्रिष्टुभंध्रुवोसिध्रुवोध्रुवंध्रुवेणबृहतीपूर्वो र्द्धचौंध्रो
वउत्तरऐंद्रोयस्तेदेवश्रवाःसौमींत्रिष्टुभंयजुरंतांदेवानांचात्वालदैव
तं प्राणायमेलिंगोक्तदेवतान्येकादशकोसिप्राजापत्योष्णिग्वर्द्ध

स.नु. मानामधवेंत्वालिंगोक्तदेवतानित्रयोदश ॥ २८ ॥ इंद्राग्नीविश्वा सू.अ.
॥१३॥ मित्रऐंद्राग्नींगायत्रीमाद्यत्रिशोकआग्नैंद्रीमोमासोमधुच्छंदावैश्वदे १
वींविश्वेदेवासोगृत्समदइंद्रमरुत्वश्चतस्रोविश्वामित्रऐन्द्रामारुती
त्रिष्टुभोमरुत्तांत्वाषजुर्मरुत्वतीयंमहां २ ॥ इंद्रोभरद्वाजोमाहेंद्री
त्रिष्टुभंयओजसावत्सोगायत्रीमुदुत्यंप्रस्कण्वः सौरींगायत्रींचित्रं
कुत्सआंगिरसस्त्रिष्टुभ ठं रूपेणवोदक्षिणाश्चतुर्णां ब्राह्मणमद्यलिं ॥१३॥
गोक्तदेवतान्यष्टौ ॥ २९ ॥ विष्णोर्वैष्णवंकदाचनादित्यदेवत्येबृ

